परासुतां मरणमविधायाकृत्वा निर्गतैः। तेषाममर्त्यत्वादिति भावः। तस्य मुनेः पत्रिभिः शरैः कृतापराधैरिव स्वामिकार्याकरणात्सापराधैरिवेत्युत्प्रेक्षा। अधोमुखैः सद्भिर्जवाद्भिमवानतीयेऽतिचक्रमे। तत्र प्रविष्टमित्यर्थः। लज्जितस्य क्वचिन्निलयनमुचितमिति भावः॥

द्विषां क्षतीर्याः प्रथमे शिलीमुखा विभिद्य देहावरणानि चक्रिरे।
न तासु पेते विशिखैः पुनर्मुनेररुंतुदत्वं महतां ह्यगोचरः॥ ५५॥

द्विषामिति॥ प्रथमे। प्रथममुक्ता इत्यर्थः। शिलीमुखा मुनिशरा द्विषां देहावरणानि वर्माणि विभिद्य याः क्षतीः प्रहारांश्चक्रिरे। तासु क्षतिषु पुनः पश्चात्प्रयुक्तैर्मुनेर्विशिखैर्न पेते न पतितम्। पिष्टपेषणदोषापातादिति भावः। तथा हि। अरुंतुदत्वं पीडितपीडनं सतामगोचरोऽविषयं हि। सन्तः पीडितपीडां न कुर्वन्तीत्यर्थः। 'न हन्याद्व्यसनप्राप्तं नार्तं नातिपरिक्षतम्' इति निषेधस्मरणादिति भावः। अरुर्मर्णं तुदतीति अरुंतुदः। 'व्रणोऽस्त्रियामीर्ममरुः' इत्यमरः। 'विध्वरुषोस्तुदः' इति खश्प्रत्ययः। 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागमः॥

समुज्झिता यावदराति निर्यती सहैव चापान्मुनिबाणसंहतिः।
प्रभा हिमांशोरिव पङ्कजावलिं निनाय संकोचमुमापतेश्चमूम्॥५६॥

समुज्झितेति॥ यावन्तोऽरातयो यावदराति। 'यावदवधारणे' इत्यव्ययीभावः। यावदराति यथा तथा समुज्झितारातिसमसंख्यया मुक्ता मुनिचापात्सह संभूयैव निर्यती निष्क्रामन्ती। तादृक्तस्य कौशलमिति भावः। यातेः शतरि ङीप्। मुनिबाणसंहतिरुमापतेश्चमूं हिमांशोः प्रभा पङ्कजावलिमिव संकोचं निनाय प्रापयामास। दुहादिपाठान्नयतिर्द्विकर्मकः॥

अजिह्ममोजिष्ठममोघमक्लमं क्रियासु बह्वीषु पृथङ्नियोजितम्।
प्रसेहिरे सादयितुं न सादिताः शरौघमुत्साहमिवास्य विद्विषः॥५७॥

अजिह्ममिति॥ अजिह्मं स्वरूपतो गत्या वावक्रम्। अन्यत्र तु जिह्मस्थानप्रवृत्तो न भवतीत्यजिह्मस्तम्। ओजिष्ठमोजस्विनं सारवत्तमं तेजिष्ठं च। उभयत्राप्योजस्विशब्दाद्विन्यन्तादिष्ठन्। 'विन्मतोर्लुक्' इति लुक्। टिलोपश्च। अमोघमवन्ध्यमक्लमं निरन्तरव्यापारेऽप्यश्रान्तं बह्वीषु क्रियासु च्छेदनभेदनपातनादिकर्मसु पृथग्भेदेन नियोजितम्। कर्मानुगुण्येन विनियुक्तमित्यर्थः। अस्य मुनेः शरौघमुत्साहमौत्सुक्यमिव। वीररसस्य स्थायिभूतं प्रयत्नविशेषमिवेत्यर्थः। सादिताः कर्षिता विद्विषः शत्रवः सादयितुं प्रतिकर्तुं न प्रसेहिरे न शेकुः। तस्योत्साहवदेव शरवर्षं दुर्धर्षमभूदिति भावः॥

---

१. 'महतामगोचरः' इति पाठः.

शिवध्वजिन्यः प्रतियोधमग्रतः स्फुरन्तमुग्रेषुमयूखमालिनम् ।
तमेकदेशस्थमनेकदेशगा निदध्युरर्कं युगपत्प्रजा इव ॥ ५८ ॥

शिवेति ॥ अनेकदेशगा नानादेशस्थाः शिवध्वजिन्यो हरसेनाः । उग्रेषवो मयूखा इवेत्युपमितसमासः । अन्यत्र तूग्रेषव इव मयूखा इति मयूरव्यंसकादित्वात्समासः । तेषां मालास्यास्तीति तमुग्रेषुमयूखमालिनम् । व्रीह्यादित्वादिनिः । एकदेशस्थमेकत्रैव स्थितं तं मुनिमर्कं प्रजा इव युगपत्प्रतियोधं योधस्य योधस्य । 'अव्ययं विभक्ति–' इत्यादिना प्रत्यर्थे वीप्सायामव्ययीभावः । अग्रतः स्फुरन्तं निदध्युर्ददृशुः । यथैकोऽर्क एकत्रैव स्थितोऽपि नानादेशस्थानामपि प्रतिपुरुषं ममैवाग्रे वर्तत इति युगपत्प्रतीयते तद्वद्बाणवर्षी मुनिरपि प्रतियोधं तथैव प्रत्यभादित्यर्थः ॥

मुनेः शरौघेण तदुग्ररंहसा बलं प्रकोपादिव विष्वगायता ।
विधूनितं भ्रान्तिमियाय सङ्गिनीं महानिलेनेव निदाघजं रजः॥५९॥

मुनेरिति ॥ प्रकोपादमर्षादिव विष्वक्समन्तादायतागच्छतोग्ररंहसा तीव्रवेगेन मुनेः शरौघेणोक्तविशेषणेन । महानिलेन वात्यया निदाघजं ग्रीष्मोत्थं रज इव । विधूनितं व्याहतं तद्बलं प्रमथानां सैन्यं सङ्गिनीमनुबन्धिनीम् । अविच्छिन्नामिति यावत् । भ्रान्तिमनवस्थानमियाय प्राप ॥

अथ त्रिभिर्विशेषकमाह—तप इत्यादिना ॥

तपोबलेनैष विधाय भूयसीस्तनूरदृश्याः स्विदिषून्निरस्यति ।
अमुष्य मायाविहतं निहन्ति नः प्रतीपमागत्य किमु स्वमायुधम्६०

एष मुनिस्तपोबलेन तपःसामर्थ्येन भूयसीर्बह्वीरदृश्यास्तनूरात्मनः शरीराणि विधाय सृष्ट्वेषून्निरस्यति स्वित्क्षिपति किम् । अथवामुष्यास्य मुनेर्मायया विहतं प्रतिहतं स्वं स्वकीयमिवायुधं प्रतीपं प्रतिकूलमागत्य । प्रत्यावृत्येत्यर्थः । नोऽस्माकं निहन्ति किमु । 'जासिनिप्रहण–' इत्यादिसूत्रेण कर्मणि षष्ठी । शेषाविवक्षायां तु द्वितीया॥

हृता गुणैरस्य भयेन वा मुनेस्तिरोहिताः स्वित्प्रहरन्ति देवताः ।
कथं न्वमी संततमस्य सायका भवन्त्यनेके जलधेरिवोर्मयः॥६१॥

हृता इति ॥ यद्वा । अस्य मुनेर्गुणैः शान्त्यादिभिर्हृता आकृष्टाः । वशीकृता इति यावत् । भयेन दरेण वा । भयाद्बिभ्यत्य एवेत्यर्थः । देवतास्तिरोहिताः सत्यः प्रहरन्ति स्वित् । तत्कुतः । अन्यथा अस्य मुनेरमी सायका जलधेरूर्मय इव कथं नु संततमनेकेऽसंख्या भवन्ति । एतच्चोक्तान्यतम पक्षासंभवे न संभवतीत्यर्थः ॥

१. 'त्वमी' इति पाठः.

जयेन कच्चिद्विरमेदयं रणाद्भवेदपि स्वस्ति चराचराय वा ।
तताप कीर्णा नृपसूनुमार्गणैरिति प्रतर्काकुलिता पताकिनी॥६२॥

जयेनेति ॥ कच्चिदयं रणाज्जयेन विरमेत् । अस्माञ्जित्वा कच्चिदयं युद्धमुपसंहरेदित्यर्थः । अपि चराचराय स्वस्ति भवेत्कच्चित् । अपि स्थावरजङ्गमं जगन्न विनश्येदित्यर्थः । अपिशब्दः संभावनायाम् । प्रार्थनायां लिङ् । इति प्रतर्काः पूर्वोक्ता ये वितर्कास्तैराकुलिता विह्वला । अत्र सहेतुकं विशेषणमाह—नृपसूनुमार्गणैरर्जुनबाणैः कीर्णा क्षिप्ता पताकिनी सेना । किरातपतेरिति शेषः । ततापं तापं प्राप ॥

अमर्षिणा कृत्यमिव क्षमाश्रयं मदोद्धतेनेव हितं प्रियं वचः ।
बलीयसा तद्विधिनेव पौरुषं बलं निरस्तं न रराज जिष्णुना॥६३॥

अमर्षिणेति ॥ अमर्षिणा क्रोधवता क्षमाश्रयं शान्तिसाध्यं कृत्यमिव । यथा मदोद्धतेन पुंसा हितं प्रियं वचो निरस्तं तिरस्कृतमिव । यथा बलीयसा बलवत्तरेण विधिना दैवेन निरस्तं पौरुषमिव । बलिष्ठदैवप्रतिहतपुरुषव्यापारस्य निष्फलत्वादिति भावः । तथा जिष्णुनार्जुनेन निरस्तं क्षिप्तं बलं किरातसैन्यं न रराज । मालोपमा॥

प्रतिदिशं प्लवगाधिपलक्ष्मणो विशिखसंहतितापितमूर्तिभिः ।
रविकरग्लपितैरिव वारिभिः शिवबलैः[1] परिमण्डलता दधे[2]॥६४॥

प्रतिदिशमिति ॥ प्लवगानामधिपोऽधीशो लक्ष्म यस्य तेन वानरचिह्नेन । 'कपिप्लवङ्गप्लवग–' इति, 'चिह्नं लक्ष्म च लक्षणम्' इति चामरः । अर्जुनेन विशिखसंहतितापितमूर्तिभिरिति विशिखा बाणास्तेषां संहतयः समूहाः । 'स्त्रियां तु संहतिर्वृन्दम्' इत्यमरः । ताभिस्तापिताः पीडिता मूर्तयो देहा येषां तैस्तथाभूतैः । शरनिकरकर्तितकलेवरैरित्यर्थः । शिवबलैः प्रथमसैन्यैः कर्तृभिः रविकरेण ग्लपितैः सूर्यकिरणशोषितैर्वारिभिरुदकैरिव प्रतिदिशं दिक्षु परिमण्डलता । परितश्चक्राकारमण्डलतेति यावत् । दधेऽधारि । प्रतिदिशं मण्डलाकारेण स्थितमित्यर्थः । धाञः कर्मणि लिट् । आतपतप्तं हि नीरं परिभ्रमति तद्वन्मुनिपीडितं सैन्यं बभ्रामेत्यर्थः । द्रुतविलम्बितं छन्दः—'द्रुतविलम्बितमाह नभौ भरौ' इति लक्षणात् ॥

प्रविततशरजाल[3]च्छन्नविश्वान्तराले
विधुवति धनुराविर्मण्डलं पाण्डुसूनौ ।
कथमपि जयलक्ष्मीर्भीतभीता विहातुं[4]
विषमनयनसेनापक्षपातं विषेहे ॥ ६५ ॥

इति भारविकृतौ महाकाव्ये किरातार्जुनीये चतुर्दशः सर्गः ।

---

१. 'शिवगणैः' इति पाठः. २. 'आददे' इति पाठः. ३. 'प्रमहसि शर' इति पाठः. ४.'भीतेव हातुं' इति पाठः.

प्रवितततेति ॥ प्रवितततानि विस्तृतानि यानि शरजालानि तैश्छन्नमाच्छादितं विश्वान्तरालं येन तस्मिञ्छरसमूहपूरितब्रह्माण्डोदरे पाण्डुसूनावत एवाविर्मण्डलमाविर्भूतमण्डलं धनुः। आविर्भूतमिति वृत्तौ भूतार्थस्यानुप्रवेशाद्भूतशब्दस्याप्रयोगः। विधुवति कम्पयत्यास्फालयति सति भीतभीतेव भीतप्रकारेव जयलक्ष्मीर्विजयश्रीः कथमपि केनचित्प्रकारेण। महता कष्टेन वा। विषमनयनसेनापक्षपातं शिवसैन्यानुरागं विहातुं त्यक्तुं विषेहे। शशाकेत्यर्थः। मालिनीवृत्तम्। लक्षणं तूक्तम् ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां किरातार्जुनीयकाव्यव्याख्यायां घण्टापथसमाख्यायां चतुर्दशः सर्गः समाप्तः ॥

---

## पञ्चदशः सर्गः।

अथ भूतानि वार्त्रघ्नशरेभ्यस्तत्र तत्रसुः।
भेजे दिशः परित्यक्तमहेष्वासा च सा चमूः ॥ १ ॥

अथेति ॥ अथानन्तरं तत्र रणे भूतानि सर्वप्राणिनः। वृत्रं हतवानिति वृत्रहेन्द्रः। 'ब्रह्मभ्रूणवृत्रेषु क्विप्'। तस्यापत्यं पुमान्वार्त्रघ्नोऽर्जुनः। 'तस्यापत्यम्' इत्यण्प्रत्ययः। तस्य शरेभ्यस्तत्रसुर्बिभ्युः। 'वा जृभ्रमुत्रसाम्' इति विकल्पादेत्वाभ्यासलोपाभावः। सा चमूश्च। इषवोऽस्यन्त एभिरितीष्वासा धनूंषि। 'धनुश्चापोऽस्त्रमिष्वासः' इति हेमचन्द्रः। 'अकर्तरि च कारके संज्ञायाम्' इति करणे घञ्। परित्यक्ता महान्त इष्वासा यया सा। परित्यक्तायुधेत्यर्थः। दिशो भेजे। पलायांचक्र इत्यर्थः। अत्र भूतत्राससेनापलायनयोः समुच्चयकथनाद्भिन्नविषयः क्रियासमुच्चयोऽलंकारः। 'गुणक्रियायौगपद्यं समुच्चयः' इति सामान्यलक्षणम्। तस्य यमकेन संसृष्टिः ॥

अपश्यद्भिरिवेशानं रणान्निववृते गणैः।
मुह्यत्येव हि कृच्छ्रेषु संभ्रमज्वलितं मनः ॥ २ ॥

अपश्यद्भिरिति ॥ गणैः प्रमथैरीशानं स्वामिनं शिवम्। पुरोवर्तिनमिति भावः। अपश्यद्भिरिव रणान्निववृते निवृत्तम्। भावे लिट्। तथा हि। कृच्छ्रेष्वापत्सु संभ्रमेण साध्वसेन ज्वलितं तप्तम्। 'संभ्रमः साध्वसेऽपि स्यात्' इति विश्वः। मनो मुह्यत्येव। अतः पुरोवर्तिनोऽप्यदर्शनमुपपद्यत इति भावः ॥

खण्डिताशंसया तेषां पराङ्मुखतया तया।
आविवेश कृपा केतौ कृतोच्चैर्वानरं नरम् ॥ ३ ॥

खण्डितेति ॥ खण्डिता ध्वस्ताशंसा जयाशा यस्यास्तया तेषां गणानां संबन्धिन्या तया। अतिसंनिकृष्टयेत्यर्थः। पराङ्मुखतया रणवैमुख्येन। पलायनेनेत्यर्थः। केतौ ध्वजे

कृत आरोपित उच्चैरुन्नतो वानरो हनूमान्येन तं नरं पुरुषम् । कपिध्वजमित्यर्थः। कृपा करुणाविवेश । तदीयदुर्दशां दृष्ट्वा स कृपाविष्टोऽभूदित्यर्थः । यमकालंकारः ॥

नन्नु शत्रुषु कथं करुणा तत्राह—

आस्थामालम्ब्य नीतेषु वशं क्षुद्रेष्वरातिषु ।
व्यक्तिमायाति महतां माहात्म्यमनुकम्पया ॥ ४ ॥

आस्थामिति ॥ आस्थां यत्नमालम्ब्य । 'आस्था त्वालम्बनास्थानयत्नापेक्षासु कथ्यते' इति विश्वः । वशं नीतेषु क्षुद्रेषु दुष्टेष्वरातिषु शत्रुषु विषयेऽनुकम्पया कृपया महतां धीराणां माहात्म्यं महानुभावत्वं व्यक्तिं स्फुटतामायाति प्राप्नोति । स्वपौरुषनिर्जितेष्वरातिष्वपि करुणा भूषणमेव महतामिति भावः ॥

स सासिः सासुसूः सासो येयायेयाययायय़ः ।
ललौ लीलां ललोऽलोलः शशीशशिशुशीः शशन् ॥ ५ ॥

स सासिरिति ॥ सहासिना वर्तमानः सासिः सखड्गः । असूनसुवन्ति प्रेरयन्तीत्यसुसुवो बाणाः । 'षु प्रेरणे' इति धातोः 'सत्सूद्विष—' इत्यादिना क्विप् । असुसूभिः सह वर्तत इति सासुसूः सबाणः । अस्यन्ते क्षिप्यन्ते शरा अनेनेत्यासो धनुः । 'अकर्तरि च कारके संज्ञायाम्' इति घञ् । आसेन सह वर्तत इति सासः सचापः । सर्वत्र 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः । येया यातव्या यानसाध्याः । अयेया अयातव्या यानं विनैव साध्याः । 'अचो यत्' इति यत्प्रत्ययः । येयाश्चायेयाश्च येयायेयास्तेषां द्वयानामाये स्वर्णगजादिलाभे याति प्राप्नोतीति येयायेयाययः । अयः शुभावहदैवं यातीत्ययय़ः । येयायेयाययश्चासावययश्चेति येयायेयाययायय़ः । याधातोरुभयत्रापि 'आतोऽनुपसर्गे कः' इति कप्रत्ययः। अतो ललति विलसतीति ललः । 'लल विलासे' । पचाद्यच् । अलोलोऽचपलः शशिन ईशः शिवस्तस्य शिशुः स्कन्दस्तं श्यणाति हिनस्तीति शशीशशिशुशीः । क्विप् । शशन्प्लुतगतिं कुर्वन् । 'शश प्लुतगतौ' इति धातोः शतृप्रत्ययः। सोऽर्जुनो लीलां शोभां ललौ प्राप । 'ला आदाने' कर्तरि लिट् । एकाक्षरपादः ॥

त्रासजिह्मं यतश्चैतान्मन्दमेवान्वियाय सः ।
नातिपीडयितुं भग्नानिच्छन्ति हि महौजसः ॥ ६ ॥

त्रासेति ॥ सोऽर्जुनस्त्रासजिह्मं भयक्लिष्टं यथा तथा यतो गच्छतः । पलायमानानित्यर्थः । एतान्गणान्मन्दमेवान्वियायानुजगाम । तथा हि । महौजसो महानुभावा भग्नानतिपीडयितुं नेच्छन्ति ॥

अथाग्रे हसता साचिस्थितेन स्थिरकीर्तिना ।
सेनान्या ते जगदिरे किंचिदायस्तचेतसा ॥ ७ ॥

अथेति ॥ अथाग्रे । बलानामित्यर्थः । हसता तद्भङ्गदर्शनात्स्मयमानेन साचिस्थितेन तन्निवारणाय तिर्यग्व्यवस्थितेन । 'तिर्यगर्थे साचि तिरः' इत्यमरः । स्थिरकीर्तिना । स्वयमभङ्गत्वादिति भावः । किंचिदीषदायस्तं खिन्नं चेतो यस्य तेन स्वकीयगणभङ्गादीषत्खिन्नचित्तेन सेनान्या स्कन्देन । 'पार्वतीनन्दनः स्कन्दः सेनानीरग्निभूर्गुहः' इत्यमरः । ते गणाः प्रमथादयो जगदिर उक्ताः । ओष्ठ्यवर्णाभावान्निरौष्ठ्यमेतत् ॥

अथैकविंशतिभिः श्लोकैः स्कन्दवाक्यमेवाह—मा विहासिष्टेत्यादिना ॥

**मा विहासिष्ट समरं समरन्तव्यसंयतः ।**
**क्षतं क्षुण्णासुरगणैरगणैरिव किं यशः ॥ ८ ॥**

रन्तव्यं रमणं क्रीडा । बहुलग्रहणाद्भावे तव्यप्रत्ययः । संयद्युद्धम् । 'समुदायः स्त्रियः संयत्समित्याजिसमिद्युधः' इत्यमरः । समे रन्तव्यसंयती येषां ते समरन्तव्यसंयतः तुल्यक्रीडासंगरा इति तेषां संबोधनम् । यूयं समरं सङ्ग्रामं मा विहासिष्ट न त्यजत । जहातेर्माङि लुङ् । मध्यमबहुवचनम् । क्षुण्णाः पराजिता असुरगणा यैस्तैः । भवद्भिरिति शेषः । अगणैरिव गणेभ्योऽन्यैरिव किं किमर्थं यशः क्षतं नाशितम् । नैतद्युक्तं महाशूराणां भवादृशानामित्यर्थः ॥

**विवस्वदंशुसंश्लेषाद्द्विगुणीकृततेजसः ।**
**अमी वो मोघमुद्गूर्णा हसन्तीव महासयः ॥ ९ ॥**

विवस्वदिति ॥ विवस्वदंशुसंश्लेषेण सूर्यकिरणसंपर्केण द्विगुणीकृतान्युत्तेजितानि तेजांसि येषां ते तथोक्ता मोघं व्यर्थमुद्गूर्णा उद्यताः । 'गुरी उद्यमने' इति धातोः कर्मणि क्तः । वो युष्माकममी महासयः खड्गा हसन्तीवेत्युत्प्रेक्षा । किं पलायमानानां खड्गैरिति हासः ॥

**वनेऽवने वनसदां मार्गं मार्गमुपेयुषाम् ।**
**वाणैर्बाणैः समासक्तं शङ्केऽशं केन शाम्यति ॥ १० ॥**

वन इति ॥ वनसदां वनेचराणामवने रक्षके वने मार्गं मृगसंबन्धिनं मार्गं पन्थानमुपेयुषाम् । पलायमानानामित्यर्थः । युष्माकमिति शेषः । वाणो ध्वनिरेषामस्तीति तैर्वाणैर्ध्वनियुक्तैः । 'वण संशब्दने' इति धातोर्घञ् । ततो 'अर्शआदिभ्यः—' इत्यच्प्रत्ययः । यमकत्वाद्बवयोरभेदः । उक्तं च—'रलयोर्डलयोस्तद्वज्जययोर्बवयोरपि । शसयोर्मनयोश्चान्ते सविसर्गाविसर्गयोः । सबिन्दुकाबिन्दुकयोः स्यादभेदेन कल्पनम् ॥' इति । बाणैः शरैः समासक्तं समासञ्जितमशं दुःखं तत्केन शाम्यतीति शङ्के । केनोपायेन शाम्येदिति विचारयामीत्यर्थः ॥

**पातितोत्तुङ्गमाहात्म्यैः संहृतायतकीर्तिभिः ।**
**गुर्वीं कामापदं हन्तुं कृतमावृत्तिसाहसम् ॥ ११ ॥**

---

१. 'सहासक्तं' इति पाठः.

पातितेति । पातितं भ्रंशितमुत्तुङ्गमाहात्म्यमुन्नतभावो यैस्तैः संहृता आहृता आयता विस्तृताः कीर्ततो यैस्तैः । युष्माभिरिति शेषः । कां गुर्वीमापदं हन्तुम् । न कांचिदपीत्यर्थः । आवृत्तिर्युद्धान्निवृत्तिः । सैव साहसं कृतम् । अतः पापादन्यन्न किंचित्फलमस्तीति भावः । तदुक्तं मनुना—'यस्तु भीतः परावृत्तः सङ्ग्रामे हन्यते परैः । भर्तुर्यद्दुष्कृतं किंचित्तत्सर्वं प्रतिपद्यते ॥ यच्चास्य सुकृतं किंचिदमुत्रार्थमुपार्जितम् । भर्ता तत्सर्वमादत्ते परावृत्तहतस्य तु ॥' इति ॥

नासुरोऽयं न वा नागो धर[1]संस्थो न राक्षसः ।
ना सुखोऽयं नवाभोगो धरणि[2]स्थो हि राजसः ॥ १२ ॥

नेति ॥ किं च अयमसुरो दैत्यो न । नागो गजो वा पन्नगश्च न । धर इव संस्था यस्य स धरसंस्थः पर्वताकारः । 'अहार्यधरपर्वताः' इत्यमरः । 'संस्था व्यवस्थाप्रणिधिसमाप्त्याकारमृत्युषु' इति वैजयन्ती । राक्षसो न । किं त्वयं सुखयतीति सुखः । सुखसाध्य इत्यर्थः । नवाभोगोऽभिनवप्रयत्नः । महोत्साह इत्यर्थः । 'आभोगो वरुणच्छत्रे पूर्णतायत्नयोरपि' इति विश्वः । धरणिस्थो भूतलचारी राजसो रजोगुणप्रधानो ना पुरुषो हि । कश्चिन्मानुष इत्यर्थः । 'पुरुषाः पूरुषा नरः । मनुष्या मानुषा मर्त्या मनुजा मानवा नराः' इत्यमरः । अतो न पलायनमुचितमिति भावः । गोमूत्रिकाबन्धः—'वर्णानामेकरूपत्वं यद्येकान्तरमर्धयोः । गोमूत्रिकेति तत्प्राहुर्दुष्करं तद्विदो विदुः ॥' इति लक्षणात् । षोडशकोष्ठद्वयेऽर्धद्वयं क्रमेण विलिख्यैकान्तरविनिमयेन वाचने श्लोकनिष्पत्तिरित्युद्धारः ॥

मन्दमस्यन्निषुलतां घृणया मुनिरेष वः ।
प्रणुदत्यागतावज्ञं जघनेषु पशूनिव ॥ १३ ॥

मन्दमिति ॥ एष मुनिर्घृणया कृपयेषुं लतां शाखामिव मन्दमस्यन्क्षिपन्वो युष्मान्पशूनिवागतावज्ञं यथा तथा जघनेषु प्रणुदति चोदयति । किमतः परं कष्टमस्तीति भावः॥

न नोननुन्नो नुन्नोनो नाना नानानना ननु ।
नुन्नोऽनुन्नो ननुन्नेनो नानेना नुन्ननुन्ननुत् ॥ १४ ॥

नेति ॥ पदच्छेदस्तावत्—न ना ऊननुन्नः नुन्नोनः ना अना नानाननाः ननु । नुन्नः अनुन्नः ननुन्नेनः ना अनेनाः नुन्ननुन्ननुत् ॥ अथ योजना—हे नानानना नानाप्रकाराण्याननानि येषां ते । नानाविधास्या इत्यर्थः । ऊनेन निकृष्टेन नुन्नो विद्ध ऊननुन्नो यः स ना न पुरुषो न । तथा नुन्न ऊनो येन स नुन्नोनो ना पुरुषोऽना नन्वपुरुषः खलु । ऊनान्नीतः पलायमानस्तु किं वक्तव्यमिति भावः । किं च । नुन्न इनः स्वामी यस्य स नुन्नेनः स न भवतीति ननुन्नेनः । नञर्थस्य नशब्दस्य सुप्सुपेति समासः । स नुन्नो वि-

१. 'धरासंस्थः' इति पाठः. २. 'धरासंस्थः' इति पाठः.

ज्ञोऽप्यनुज्ञोऽविज्ञ एव । यूयमनुज्ञस्वामिकत्वादनुज्ञा एवेति भावः । तथा नुन्ननुन्न-नुदतिशयेन नुन्ना नुन्ननुन्नास्तान्नुदतीति नुन्ननुन्ननुदतिपीडितपीडको ना पुरुषोऽनेना निर्दोषो न भवतीति । किंतु सदोष एवेति । 'नार्तं नातिपरिक्षतम्' इति निषेधादि-त्यर्थः । अयं तु नैतादृश इति न पलायितव्यमिति भावः । अयमेकव्यञ्जनः । अन्त्य-स्तकारस्तु न दोषावहः । 'नान्त्यवर्णस्तु भेदकः' इत्यभ्यनुज्ञानात् ॥

**वरं कृतध्वस्तगुणादत्यन्तमगुणः पुमान् ।**
**प्रकृत्या ह्यमणिः श्रेयान्नालंकारश्च्युतोपलः ॥ १५ ॥**

वरमिति ॥ कृताः पूर्वमुत्पादिताः पश्चाद्ध्वस्ता नष्टास्ते कृतध्वस्ताः । 'पूर्वकाल–' इत्यादिना समासः । कृतध्वस्ता गुणा यस्य तस्मात्पुंसोऽत्यन्तमतिशयेनागुणो निर्गुणः पुमान्वरं मनाक्प्रियः । किंचित्प्रिय इत्यर्थः । 'वरं क्लीबे मनाक्प्रिये' इत्यमरः । तथा हि । प्रकृत्या स्वभावेनामणिर्मणिरहितोऽलंकारः श्रेयान् । च्युतोपलो भ्रष्टरत्नो न श्रे-यान् । 'उपलः प्रस्तरे रत्ने' इति विश्वः । पलायितुः समरादसमर एव वरमिति भावः । अत्र समानविषयारोपयोः प्रतिबिम्बकरणाद्दृष्टान्तालंकारः ॥

**स्यन्दना नो चतुरगाः सुरेभा वाविपत्तयः ।**
**स्यन्दना नो च तुरगाः सुरेभावा विपत्तयः ॥ १६ ॥**

स्यन्दना इति ॥ स्यन्दन्ते प्रद्रवन्तीति स्यन्दना जवनाः । स्यन्दना रथा नो सन्ति । नन्द्यादित्वाल्ल्युः । चतुरं गच्छन्तीति चतुरगाः । तुरगाश्चाश्वा नो सन्ति । सुरेभा शोभनबृंहणाः सुरेभा । वा सुरगजाश्च नो सन्ति । अविपत्तयो विपत्तिरहिताः । विपत्तयो वा विशिष्टाः पदातयो नो सन्ति । अतो न भेतव्यमिति भावः । अत्र पूर्वो-त्तरार्धगतानां विशेषणानां चोद्देशोद्देश्यीभूतानां यथासंख्यसंबन्धानुक्रमाद्यथासं-ख्यालंकारो यमकेन संसृष्टः ॥

**भवद्भिरधुनारातिपरिहापितपौरुषैः ।**
**ह्रदैरिवार्कनिष्पीतैः प्राप्तः पङ्को दुरुत्तरः ॥ १७ ॥**

भवद्भिरिति ॥ अधुनारातिभिः परिहापितानि त्याजितानि पौरुषाणि यैस्तैर्भवद्भिः । अर्कनिष्पीतैरर्केण संशोषितैर्ह्रदैरिव । दुरुत्तरो दुस्तरः पङ्क इव पङ्को दुष्कीर्तिः प्राप्तः ॥

**वेत्रशाककुजे शैलेऽलेशैजेऽकुकशात्रवे ।**
**यात किं विदिशो जेतुं तुञ्जेशो दिवि किंतया ॥ १८ ॥**

वेत्रेति ॥ वेत्राणि वंशाः फलिन्यो वा शाका वर्बराश्च कुजा वृक्षा यस्मिंस्तस्मिन्वेत्रशा-ककुजे । शत्रुणा दुःप्रवेश्य इत्यर्थः । 'वेत्रं वंशफलिन्योश्च' इति विश्वः । 'शाकवर्बरवर्ध-काः' इत्यमरः । लेशेन स्तोकेनाप्येजते कम्पत इति लेशैजः स न भवतीत्यलेशैजस्त-

स्मिन्। अत्यन्ताकम्पन इत्यर्थः। 'एजृ कम्पने'। पचाद्यच्। न कोकते नादत्त इत्यकुको ग्रहणासमर्थः शात्रवो यस्मिंस्तस्मिन्नकुकशात्रवे। 'कुक आदाने'। पचाद्यच्। शैले पर्वते। केषां भावः किंता कुत्सितता तयोपलक्षिताः सन्तः। 'कुत्साप्रश्नवितर्केषु क्षेपे किंशब्द इष्यते' इति शाश्वतः। विदिशो जेतुं यात गच्छत किम्। यातेः संप्रश्ने लोट् मध्यमपुरुषबहुवचनम्। दिवि स्वर्गेऽपि। तुञ्जेश इति तेषां संबोधनम्। तुञ्जन्त इति तुञ्जा हिंसका दैत्याः। 'तुजि हिंसायाम्'। पचाद्यच्। तेभ्यो दैत्येभ्य ईशत इति तुञ्जेशः। ईशेः क्विप्। तेभ्योऽपि शक्ता इत्यर्थः। स्वर्गेऽप्यसुरविजयिनां युष्माकमत्र क्षुद्रस्थले क्षुद्रशत्रौ पलायनमनुचितमिति भावः। प्रतिलोमानुलोमपादः॥

नन्वनाथा वयं पलायामह इति तच्च न युक्तमित्याह—

अयं वः क्लैब्यमापन्नान्दृष्टपृष्ठानरातिना।
इच्छतीशश्च्युताचारान्दारानिव निगोपितुम्॥ १९॥

अयमिति॥ अयमीशः स्वामी शिवः क्लैब्यं निष्पौरुषत्वमापन्नान्प्राप्तांस्तथारातिना दृष्टपृष्ठान्। पलायमानानित्यर्थः। वो युष्मांश्च्युताचारान्स्खलितव्रतान्दारान्कलत्राणीव। 'अथ पुंभूम्नि दाराः' इत्यमरः। निगोपितुं गोप्तुम्। ऊदित्त्वादिड्विकल्पः। दारदोषं भर्तेव स्वमहिम्ना युष्मद्दोषं संवरितुमिच्छति। अतः कुतो युष्माकमनर्थ इत्यर्थः॥

ननु हो मथना राघो घोरा नाथमहो नु न।
तयदातवदा भीमा माभीदा बत दायत॥ २०॥

न्विति॥ नन्वित्यामन्त्रणे। हो इत्याह्वाने। 'हे है व्यस्तौ समस्तौ च हूतिसंबोधनार्थयोः। हो हौ चैवंविधौ ज्ञेयौ संबुद्ध्याह्वानयोरपि' इति विश्वः। मथ्नन्तीति मथनाः। 'मन्थ विलोडने'। कर्तरि ल्युट्। राघ्नुवन्ति समर्था भवन्तीति राघः। 'राघृ सामर्थ्ये' क्विप्। घोराः क्रूराः। शत्रूणामिति भावः। नाथं महयन्ति पूजयन्तीति नाथमहः। इरशिग्रहणात्कर्मण्युपपदे क्विप्। तयन्ति रक्षन्तीति तया रक्षकाः। पचाद्यच्। दायन्तीति दाताः शुद्धाः। 'दैप् शोधने'। कर्तरि क्तः। वदन्तीति वदा वक्तारः। पचाद्यच्। तेषां द्वन्द्वस्तयदातवदाः। भीमा भयंकरा माभीः। नञर्थमाशब्दस्य सुप्सुपेति समासः। तान्ददतीति माभीदा अभयप्रदाः। एवंविधा यूयमिति शेषः। बतेति खेदे। बवयोरभेदः। न दायत नु न शुद्धाः किम्। नु पृच्छायाम्। किंतु शुद्धा एव। काकुरत्रानुसंधेयः। 'दैप् शोधने'। लोट्। मध्यमपुरुषबहुवचनम्। प्रतिलोमानुलोमपादः॥

किं त्यक्तापास्तदेवत्वमानुष्यकपरिग्रहैः।
ज्वलितान्यगुणैर्गुर्वी स्थिता तेजसि मानिता॥ २१॥

किमिति॥ अपास्तोऽवधीरितो देवत्वमानुष्यकयोः परिग्रहः स्वीकारो यैस्तैः। अ-

---

१. 'वाञ्छति' इति पाठः. २. 'विगोपितुम्' इति पाठः.

तिर्देवमानुषैरित्यर्थः । मनुष्याणां भावो मानुष्यकम् । योपधाद्गुरूपोत्तमाद्वुञ् । ज्वलिता उज्ज्वलिताः । प्रकाशिता इति यावत् । अन्यगुणा असदृशगुणा यैस्तैः । 'अन्यौ विभिन्नासदृशौ' इति वैजयन्ती । ईदृशैः । भवद्भिरिति शेषः । तेजसि प्रतापे स्थिता प्रतापैकशरणा मानिता शूरत्वाभिमानिता किमिति त्यक्ता । किमिति निर्लज्जैः पलायत इति भावः ॥

निशितासिरतोऽभीको न्येजतेऽमरणा रुचा ।
सारतो न विरोधी नः स्वाभासो भरवानुत ॥ २२ ॥

निशितेति ॥ हे अमरणा मरणरहिताः, निशितासिरतोऽतितीक्ष्णखड्गरतोऽभीको निर्भीको रुचा तेजसोपलक्षितः सुष्ठ्वाभासत इति स्वाभासो रमणीयः । पचाद्यच् । उतात्यर्थमतिशयेन भरवान् । रणभरसहिष्णुरित्यर्थः । 'उतात्यर्थविकल्पयोः' इति विश्वः । ईदृशो नोऽस्माकं विरोधी शत्रुः सारतो बलतो न न्येजते न कम्पते । न प्रचलतीत्यर्थः । 'एजृ कम्पने' । लट् । अतो भवद्भिरपि स्थातव्यमेव । न चलितव्यमिति भावः ॥

नन्वयं न चलतीति कथं ज्ञायते । तत्राह—

तनुवारभसो भास्वानधीरोऽविनतोरसा ।
चारुणा रमते जन्ये कोऽभीतो रसिताशिनि ॥ २३ ॥

तन्विति ॥ तनुमावृणोत्याच्छादयतीति तनुवारं वर्म । कर्मण्यण् । तेन बभस्ति भासत इति तनुवारभसः । 'भस दीप्तौ' । पचाद्यच् । भास्वांस्तेजस्वी चारुणा भास्वताविनतेनोन्नतेनोरसा वक्षःस्थलेनोपलक्षितः । एवंविधोऽप्यधीरो धैर्यरहितो रसितेन शब्दितेनैवाश्नाति ग्रसतीति रसिताशी तस्मिन् । रवेणैव विश्वप्राणहारिणीत्यर्थः । आभीक्ष्ण्ये णिनिः । जन्ये युद्धे । 'युद्धमायोधनं जन्यम्' इत्यमरः । अभीतो निर्भीकः सन्को रमते कः क्रीडति । यदि रमते तर्ह्ययमेवेति भावः । निर्भयसंचारादेवास्य निश्चलत्वं निश्चीयत इत्यर्थः । पूर्वश्लोकस्यायं प्रतिलोमः ॥

अथ पञ्चभिः कुलकमाह— विभिन्नेत्यादिभिः ॥

विभिन्न[1]पातिताश्वीयनिरुद्धरथवर्त्मनि ।
हतद्विप[2]नगष्ठ्यूतरुधिराम्बुनदाकुले ॥ २४ ॥

आहवं विशिनष्टि—विभिन्नानि विदारितान्यत एव पातितान्यश्वीयान्यश्वसमूहाश्च ते तथा । 'पूर्वकाल—' इति समासः । तैरश्वसमूहैर्निरुद्धानि रथानां वर्त्मानि यस्मिंस्तथोक्ते । 'वृन्दे त्वश्वीयमाश्ववत्' इत्यमरः । 'केशाश्वाभ्यां यञ्छावन्यतरस्याम्' इति छप्रत्ययः । हतास्ताडिता द्विपा गजा एव नगाः शैलाः । 'शैलवृक्षौ नगावगौ' इत्यमरः । तैः ष्ठ्यूतान्युज्झितानि । ष्ठीवतेः कर्मणि क्तः । छ्वोः 'शूडनुनासिके च' इत्यूठादेशः । तानि रुधिराण्येवाम्बूनि तेषां नदैः प्रवाहैराकुले व्याप्ते ॥

---

१. 'निर्भिन्न' इति पाठः. २. 'पाङ्गनिष्ठ्यूत' इति पाठः.

देवाकानिनि कावादे वाहिकास्वस्वकाहि वा ।
काकारेभभरे काका निस्वभव्यव्यभस्वनि ॥ २५ ॥

देवेति ॥ पुनश्च । देवानाकनयत्युद्दीपयत्युत्साहयतीति देवाकानी तस्मिन्देवाकानिनि । 'कन दीप्तौ' इति धातोर्ण्यन्ताण्णिनिः । कावादे ईषद्वादो वाक्कलहः । 'ईषदर्थे' इति कुशब्दस्य कादेशः । तद्वति कावादे । 'अर्शआदिभ्योऽच्' । वाहिका पर्यायेन रणभारोद्वहनम् । वहेः पर्याये धात्वर्थनिर्देशे ण्वुल्वक्तव्यः । वाहिकया क्रमप्राप्तरणक्रियया सुष्ठु शोभनं यथा तथास्वकान्परानाजिहीतेऽभियुङ्क्ते । योजयतीति यावत् । वाहिकास्वस्वकाहास्तस्मिन् । योद्धृधर्मो युद्ध उपचर्यते । 'ओहाङ् गतौ' इति धातोर्विच्प्रत्ययः । सोमपाशब्दवत्प्रक्रिया । वाशब्दश्चार्थे । कं मदोदकमाकिरन्तीति काकारा मदस्राविणः । किरतेराङ्पूर्वात्कर्मण्यण् । एवंविधा इभभरा गजघटा यत्र यस्मिन्काकारेभभरे । काका इव काका गर्ह्या इति लक्षणया तेषामामन्त्रणम् । निस्वा निरुत्साहा भव्याः सोत्साहास्तानुभयान्व्ययन्ति संवृण्वन्तीति निस्वभव्यव्याः । 'व्येञ संवरणे' । 'आतोऽनुपसर्गे कः' । तैर्बभस्ति भासत इति निस्वभव्यव्यभस्वांस्तस्मिन् । 'अन्येभ्योऽपि दृश्यते' इति क्वनिप् । सर्वतो भ्रमणात्सर्वतोभद्राख्यश्चित्रबन्धः । यथाह दण्डी—'तदिदं सर्वतोभद्रं भ्रमणं यदि सर्वतः' इति । उद्धारस्तु—चतुष्कोष्ठे चतुरङ्गबन्धक्रमेणाद्यपङ्क्तिचतुष्टये पादचतुष्टयं विलिख्यानन्तरपङ्क्तिचतुष्टयेऽप्यधः क्रमेण पादचतुष्टयलेखने प्रथमासु चतसृषु पङ्क्तिषु प्रथमः पादः सर्वतो वाच्यते, द्वितीयादिषु द्वितीय इत्यादि ॥

प्रनृत्तशववित्रस्ततुरगाक्षिप्तसारथौ ।
मारुतापूर्णतूणीरविकुष्टहतसादिनि ॥ २६ ॥

प्रनृत्तेति ॥ प्रनृत्तशवेभ्यो नृत्यत्कबन्धेभ्यो वित्रस्तैः क्षुभितैस्तुरगैराक्षिप्ता अवधूताः सारथयो यत्र तस्मिन् । तथा मारुतेनापूर्णैर्व्याप्तैस्तूणीरैर्निषङ्गैर्विकुष्टाः शब्दायमाना हतास्ताडिताः सादिनस्तौरङ्गिका यत्र तस्मिन् । पाठान्तरे मारुतापूर्णतूणीरैर्विकृष्टा आकर्षिता अत एव हता मारिताः सादिनोऽश्ववारा यत्र तस्मिन् ॥

ससत्त्वरतिदे नित्यं सदरामर्षनाशिनि ।
त्वराधिककसन्नादे रमकत्वमकर्षति ॥ २७ ॥

ससत्त्वेति ॥ ससत्त्वानां सत्त्ववतां रतिदे रागप्रदे नित्यं सदराणां सभयानामभर्षनाशिनि क्रोधहारिणि त्वरयोत्साहेनाधिकं कसन्तो विकसन्तो नादा यत्र तस्मिन्रमयतीति रकमः । रमधातोर्डुञ् । तस्याकादेशः । तद्भावो रमकत्वम् । रणकर्मणा पररञ्जकत्वमकर्षत्यनुदति । वीराणां परस्परमुत्साहं रणकर्मणा स्फोरयतीत्यर्थः । अर्धभ्रमकः ॥

आसुरे लोकवित्रासविधायिनि महाहवे ।
युष्माभिरुन्नतिं नीतं निरस्तमिह पौरुषम् ॥ २८ ॥

आसुर इति ॥ एवंविध आसुरेऽसुरसंबन्धिनि लोकविश्वासविधायिनि लोकभयंकरे महाहवे महायुद्धे युष्माभिरुन्नतिं वृद्धिं नीतं प्रापितं पौरुषं पुरुषकर्म निरस्तं नाशितमिह सङ्ग्रामे ॥

इति शासति सेनान्यां गच्छतस्ताननेकधा ।
निषिध्य हसता किंचित्तस्थे तत्रान्धकारिणा ॥ २९ ॥

इतीति ॥ इतीत्थं सेनान्यां स्कन्दे शासत्याज्ञापयत्यनेकधा गच्छतः पलायमानांस्तान्गणान्निषिध्य निवार्यान्धकारिणा हरेण किंचिद्धसता तस्थे स्थितम् । भावे लिट् । निरौष्ठ्यः ॥

मुनीषुदहनातप्ताँल्लज्जया निविवृत्स्यतः ।
शिवः प्रह्लादयामास तान्निषेधहिमाम्बुना[1] ॥ ३० ॥

मुनीति ॥ मुनेरिषव एव दहनस्तेनातप्तान्पीडितांस्तथा लज्जया रणभङ्गाच्छालीनत्वेन निविवृत्स्यतो निवर्तिष्यमाणान् । 'वृद्भ्यः स्यसनोः' इति विकल्पात्परस्मैपदम् । तान्गणाञ्शिवो निषेधो मा भैष्ट मा पलायतेति निवारणवचनं स एव हिमाम्बु शीतोदकं तेन प्रह्लादयामास । रूपकालंकारः ॥

दूनास्तेऽरिबलादूना निरेभा बहु मेनिरे ।
भीताः शितशराभीताः शंकरं तत्र शंकरम् ॥ ३१ ॥

दूना इति ॥ दूनाः शरतप्ताः । 'ल्वादिभ्यः' इति निष्ठानत्वम् । अरिबलाच्छत्रुबलादूना ऊनबलाः । 'पञ्चमी विभक्ते' इति पञ्चमी । निरेभा निःशब्दाः । कुतः । भीतास्त्रस्ताः । कुतः । यतः शितैस्तीक्ष्णैः शरैरभीता अभिव्याप्ताः । इणः कर्मणि क्तः । ते गणास्तत्र रणे शंकरमभयवचनेन सुखकरं शंकरं शिवं बहु यथा तथा मेनिरेऽमन्यन्त । पादाद्यन्तयमकम् ॥

महेषुजलधौ शत्रोर्वर्तमाना दुरुत्तरे ।
प्राप्य पारमिवेशानमाशश्वास पताकिनी ॥ ३२ ॥

महेष्विति ॥ दुरुत्तरे दुस्तरे शत्रोः संबन्धिनि महेषुजलधौ महति बाणसागरे वर्तमाना पताकिनी सेनेशानं शिवं पारं परतीरमिव । 'पारावारे परार्वाची' इत्यमरः । प्राप्याशश्वास प्राणिति स्म ॥

स बभार रणापेतां चमूं पश्चादवस्थिताम् ।
पुरः सूर्यादपावृत्तां छायामिव महातरुः ॥ ३३ ॥

स इति ॥ स शिवो रणापेतां रणादपवृत्तां पराङ्मुखीभूतामत एव पश्चात्पृष्ठभागेऽव-

[1] 'हिमांशुना' इति पाठः.

स्थितां चमूं पुरोऽग्रे स्थितः सूर्यः पुरःसूर्यः । रणोपमानमेषः । तस्मादपावृतां परावृत्तां छायां महातरुरिव बभार । छायां तरुरिवात्मैकशरणां तां चमूं न मुमोचेत्यर्थः ॥

मुञ्चतीशे शराञ्जिष्णौ पिनाकस्वनपूरितः ।
दध्वान ध्वनयन्नाशाः स्फुटन्निव धराधरः ॥ ३४ ॥

मुञ्चतीति ॥ ईशे हरे कर्तरि जिष्णावर्जुने विषये शरान्मुञ्चति सति पिनाकस्य शिवकार्मुकस्य स्वनेन ध्वनिना पूरितो धराधर इन्द्रकीलः स्फुटन्निव विदीर्यमाण इवेत्युत्प्रेक्षा । आशा दिशो ध्वनयञ्शब्दयुक्ताः कुर्वन्दध्वान शब्दमकरोत् । 'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः' इत्यमरः ॥

तद्गणा ददृशुर्भीमं चित्रसंस्था इवाचलाः ।
विस्मयेन तयोर्युद्धं चित्रसंस्था इवाचलाः ॥ ३५ ॥

तदिति ॥ भीमं तयोर्हरपाण्डवयोस्तत्प्रसिद्धं युद्धं गणाः प्रमथाश्चित्रसंस्थाश्चित्राकारा अचलाः शैला इव । तथा चित्र आलेख्ये संस्था स्थितिर्येषां ते चित्रसंस्थाश्चित्रलिखिता इवाचला आश्चर्यवशान्निश्चलाः सन्तो विस्मयेन ददृशुः ॥

परिमोहयमाणेन शिक्षालाघवलीलया ।
जैष्णवी विशिखश्रेणी परिजह्रे पिनाकिना ॥ ३६ ॥

परीति ॥ शिक्षालाघवलीलयाभ्यासपाटवातिशयेन हेतुना परिमोहयमाणेन व्यामोहयता । 'अणावकर्मकाच्चित्तवत्कर्तृकात्' इति परस्मैपदे प्राप्ते 'न पादमि–' इत्यादिना तत्प्रतिषेधादात्मनेपदं शानच् । 'णेर्विभाषा' इति कृत्स्थस्य नस्य वा णत्वम् । पिनाकिना हरेण जिष्णोरर्जुनस्येयं जैष्णवी विशिखश्रेणी बाणसंघातः परिजह्रे निरस्ता ॥

अवद्यन्पत्रिणः शंभोः सायकैरवसायकैः ।
पाण्डवः परिचक्राम शिक्षया रणशिक्षया ॥ ३७ ॥

अवद्यन्निति ॥ पाण्डवोऽर्जुनोऽवसायकैरवसानकरैः । स्यतेर्ण्यन्ताण्ण्वुल्प्रत्ययः । सायकैर्बाणैः शंभोः पत्रिणः शरानवद्यन्खण्डयन् । द्यतेः शतृप्रत्ययः । 'ओतः श्यनि' इत्योकारलोपः । शिक्षया शक्तुं प्रभवितुमिच्छया । उत्साहेनेत्यर्थः । रणे शिक्षयाभ्यासेन च परिचक्राम । उत्साहनैपुण्याभ्यां चचारेत्यर्थः ॥

चारचुञ्चुश्चिरारेची चञ्चच्चीररुचा रुचः ।
चचार रुचिरश्चारु चारैराचारचञ्चुरः ॥ ३८ ॥

चारैरिति ॥ चारैर्गतिविशेषैर्वित्त इति चारचुञ्चुः । 'तेन वित्तश्चुञ्चुप्चणपौ' इति चुञ्चुप्प्रत्ययः । चिरमारेचयति रिक्तीकरोति शत्रूनिति चिरारेची । चञ्चतश्चलतश्चीरस्य

वल्कलस्य रुचा प्रभया । रोचत इति रुचः शोभमानः । 'इगुपध–' इति कः । रुचिरः सुन्दरः । चञ्चूर्यते भृशं चरतीति चञ्चुरः । चरतेर्यङन्तात्पचाद्यच् । 'चरफलोश्च' इति नुमागमः । 'यङोऽचि च' इति यङो लुक् । आचारस्य युद्धव्यवहारस्य चञ्चुरो भृशमाचरितः स मुनिश्चारु यथा तथा चारैश्चक्रादिबन्धैर्गतिविशेषैश्चचार । 'चारः पियालवृक्षे स्याद्गतौ बन्धापसर्पयोः' इति विश्वः । द्व्यक्षरः ॥

स्फुरत्पिशङ्गमौर्वीकं धुनानः स बृहद्धनुः ।
धृतोल्कानलयोगेन तुल्यमंशुमता बभौ ॥ ३९ ॥

स्फुरदिति ॥ स मुनिरर्जुनः स्फुरन्ती पिशङ्गी पिशङ्गवर्णा मौर्वी ज्या यस्य तत्तथोक्तम् । 'नद्यृतश्च' इति कप्प्रत्ययः । बृहद्धनुर्गाण्डीवं धुनानः कम्पयन् । उल्कैवानलस्तेन धृतो योगो येन तेनांशुमतार्केण सूर्येण तुल्यं बभौ । उपमा ॥

पार्थबाणाः पशुपतेरावव्रुर्विशिखावलीम् ।
पयोमुच इवारन्ध्राः सावित्रीमंशुसंहतिम् ॥ ४० ॥

पार्थेति ॥ पार्थबाणा अर्जुनशराः पशुपतेर्विशिखावलीं शरसंघातम् । सवितुरियं सावित्री तामंशुसंहतिं किरणसमूहमरन्ध्रा निबिडाः पयोमुचो मेघा इव । आवव्रुस्तिरोदधुः ॥

शरवृष्टिं विधूयोर्वीमुदस्तां सव्यसाचिना ।
रुरोध मार्गणैर्मार्गं तपनस्य त्रिलोचनः ॥ ४१ ॥

शरेति ॥ त्रिलोचनः शिवः । सव्येन सचते समवैतीति तेन सव्यसाचिनार्जुनेनोदस्तां क्षिप्तामुर्वीं महतीं शरवृष्टिं मार्गणैः शरैर्विधूय निरस्य तपनस्य रवेर्मार्गं रुरोधावव्रे ॥

तेन व्यातेनिरे भीमा भीमार्जनफलाननाः ।
न नानुकम्प्य विशिखाः शिखाधरजवाससः ॥ ४२ ॥

तेनेति ॥ तेन शिवेन भीमा भयंकरास्तथा भियो भयस्य मार्जनं निरासस्तदेव फलं प्रयोजनं येषां तान्याननान्यग्राणि येषां ते भीमार्जनफलाननाः । तथा शिखाधरा मयूरास्तेषु जातानि शिखाधरजानि बर्हाणि तानि वासांसीव वासांसि पक्षा येषां ते शिखाधरजवाससः । मयूरपक्षिण इत्यर्थः । विशिखा बाणा अनुकम्प्य कृपां कृत्वा न व्यातेनिर इति न । किं त्वनुकम्प्यैवेत्यर्थः । अनुजिघृक्षुत्वादिति भावः । संभाव्यनिषेधने द्वौ प्रतिषेधावित्युक्तम् । शृङ्खलायमकम् ॥

द्युवियद्गामिनी तारसंराव[3]विहतश्रुतिः ।
हैमीषुमाला शुशुभे विद्युतामिव संहतिः ॥ ४३ ॥

---

१. 'पिङ्गल' इति पाठः. २. 'धुन्वानः' इति पाठः. ३. 'विराव' इति पाठः.

द्युवियदिति ॥ द्यां स्वर्गं वियदन्तरिक्षं च गामिनी व्यापिनी द्युवियद्गामिनी। द्वितीयाप्रकरणे श्रितादिषु गम्यादीनामुपसंख्यानात्समासः। तारेणोच्चैस्तरेण संरावेण नादेन विहता विद्धाः श्रुतयः कर्णा यया सा तथोक्ता। हैमी हेममयीषुमाला शिवशरावलिर्विद्युतां संहतिरिवोक्तविशेषणा विद्युन्मालेव। शुशुभे। चतुर्थपादवर्णानां त्रिपाद्यां संभवाद्गूढचतुर्थपादमाहुः ॥

विलङ्घ्य पत्रिणां पङ्क्तिं[1] भिन्नः शिवशिलीमुखैः।
ज्यायो वीर्यमुपाश्रित्य[2] न चकम्पे कपिध्वजः ॥ ४४ ॥

विलङ्घ्येति ॥ शिवशिलीमुखैः पत्रिणां पङ्क्तिं निजशरावलिं विलङ्घ्यातिक्रम्य भिन्नो विद्धः कपिध्वजोऽर्जुनो ज्यायः प्रशस्तम्। 'वृद्धप्रशस्ययोर्ज्यायान्' इत्यमरः। वीर्यं सत्त्वमुपाश्रित्यावस्थाय न चकम्पे न चचाल। किं तु तान्सहन्नवतस्थावित्यर्थः ॥

जगतीशरणे युक्तो हरिकान्तः सुधासितः।
दानवर्षीकृताशंसो नागराज इवाबभौ ॥ ४५ ॥

जगतीति ॥ अर्थत्रयवाची श्लोकोऽयम्। तत्रादावगराज इति पदच्छेदमाश्रित्य प्रथमोऽर्थोऽभिधीयते—ईशस्य रणे युक्तः शक्तः। अन्यत्र जगतीशरणे भूरक्षणे युक्तः स्थितः। विधिनेति शेषः। हरिः सिंह इव कान्तो मनोहरः। अन्यत्र हरीणां सिंहानां कान्त आवासदानात्प्रियः। सुष्ठु दधाति पालयति प्रजा इति सुधा। क्विबन्तः। असितः कृष्णवर्णः। ततो विशेषणसमासः। अन्यत्र सुधा लेपद्रव्यविशेषस्तद्वत्सितो धवलः। दानवर्षी बहुप्रदः कृताशंसः कृतजयाभिलाषः। अन्यत्र दानवैर्दैत्यैर्ऋषिभिः इना कामेन च कृताशंसा नानाफलाभिलाषो यस्मिन्स ना नरोऽर्जुनः। अगराजो हिमवानिव जगत्याबभावित्येकोऽर्थः। अथैरावतसाम्यमुच्यते—जगतीं भुवं श्यन्ति तनूकुर्वन्तीति ते जगदीशा राक्षसास्तेषां रणस्तत्र युक्तो विहितः समर्थः। हरिकान्त इन्द्रप्रियः। उभयत्रापि समानमेतत्। सुधासितोऽमृतस्वच्छः। एकत्र शीलतः। अन्यत्र वर्णत इति विवेकः। दानवर्षी धनप्रदो मदस्रावी च। कृताशंस उभयत्र कृतजिगीषः। पार्थो नागराज इव ऐरावत इवाबभाविति द्वितीयोऽर्थः। अथ शेषौपम्यमुच्यते—जगतीशरणे भूरक्षणे युक्तो नियुक्तः। दैवेनेति शेषः। 'शरणं गृहरक्षित्रोः' इत्यमरः। हरिकान्तः कृष्णप्रियः। उभयत्रापि तुल्यम्। सुष्ठु दधातीति सुधा। वसुधेति केचित्। एकदेशग्रहणात्समुदायग्रहणम्। तत्र सितो बद्धः। 'षिञ् बन्धने'। क्तः। अन्यत्र सुधयामृतेन सितो बद्धः। अमृतप्रिय इत्यर्थः। दानवाश्च ऋषयश्च ईर्लक्ष्मीश्च तैः कृताशंसो विहितप्रशंसः। उभयत्रापि तुल्यमेतत्। सोऽर्जुनो नागराजः शेष इवाबभाविति तृतीयोऽर्थः ॥

विफलीकृतयत्नस्य क्षतबाणस्य शंभुना।
गाण्डीवधन्वनः[3] खेभ्यो निश्चक्राम[4] हुताशनः ॥ ४६ ॥

१. 'पङ्क्तीः' इति पाठः. २. 'समाश्रित्य' इति पाठः. ३. 'धनुषः' इति पाठः. ४. 'निश्चचार'; 'निःससार' इति पाठौ.

विफलीति ॥ शंभुना क्षतबाणस्यातएव विफलीकृतयत्नस्य निष्फलप्रयत्नस्य गाण्डीवं धनुर्यस्य तस्य गाण्डीवधन्वनोऽर्जुनस्य । 'वा संज्ञायाम्' इत्यनङादेशः । खेभ्य इन्द्रियरन्ध्रेभ्यः । 'खमिन्द्रिये सुखे स्वर्गे' इति विश्वः । हुताशनोऽग्निर्निश्चक्राम निष्क्रान्तः । क्रोधादिति भावः ॥

स पिशङ्गजटावलिः किरन्नुरुतेजः परमेण मन्युना ।
ज्वलितौषधिजातवेदसा हिमशैलेन समं विदिद्युते ॥ ४७ ॥

स इति ॥ पिशङ्गजटावलिः पिशङ्गजटाजूटः परमेणोत्कृष्टेन मनुना क्रोधेनोरु महत्तेजः किरन्विक्षिपन्सोऽर्जुनो ज्वलिता ओषधयस्तृणज्योतींषि जातवेदा दवाग्निश्च यस्मिंस्तेन हिमशैलेन समं तुल्यं हिमाद्रिरिव विदिद्युते हिमाद्रिवच्छुशुभ इति बिम्बप्रतिबिम्बभावोपमा ॥

शतशो विशिखानवद्यते भृशमस्मै रणवेगशालिने ।
प्रथयन्ननिवार्यवीर्यतां प्रजिघायेषुमघातुकं शिवः ॥ ४८ ॥

शतश इति ॥ शिवः शतशो विशिखानवद्यते खण्डयते रणवेगशालिने रणसंरम्भशोभिनेऽस्मै पार्थाय भृशमत्यर्थमनिवार्यवीर्यताम् । निजामिति शेषः । तस्मै प्रथयन्दर्शयन् । किं त्वघातुकममारकम् । 'लषपत—' इत्यादिना हन्तेरुकञ् । इषुम् । जातावेकवचनम् । प्रजिघाय प्रयुयुजे । 'हि गतौ' इति धातोर्लिट् । 'हेरचङि' इति कुत्वम् ॥

शंभोर्धनुर्मण्डलतः प्रवृत्तं तं मण्डलादंशुमिवांशुभर्तुः ।
निवारयिष्यन्विदधे सिताश्वः शिलीमुखच्छायवृतां धरित्रीम् ४९

शंभोरिति ॥ सिताश्वोऽर्जुनः शंभोर्धनुर्मण्डलतो धनुर्वलयात्प्रवृत्तं निष्क्रान्तं तमिषुम् । अंशुभर्तुरर्कस्य मण्डलात्प्रवृत्तमंशुमिव । अत्रापीषुवज्जातावेकवचनम् । निवारयिष्यन्निवारयितुकामः । क्रियार्थक्रियायां लृटि तस्य शत्रादेशः । धरित्रीं भुवं शिलीमुखानां छाया शिलीमुखच्छायम् । 'छाया बाहुल्ये' इति नपुंसकत्वम् । तेन वृतां व्याप्तां विदधे कृतवान् । शरजालच्छायावृतां धरित्रीमकरोदित्यर्थः । उपमालंकारः ॥

घनं विदार्यार्जुनबाणपूगं ससारवाणोऽयुगलोचनस्य ।
घनं विदार्यार्जुनबाणपूगं ससार बाणोऽयुगलोचनस्य ॥ ५० ॥

घनमिति ॥ अयुगलोचनस्य विषमनेत्रस्येशस्यालोचनस्य । लोच्यतेऽसौ लोचनः । कर्मणि ल्युट् । न लोचनोऽलोचनस्तस्यालोचनस्याचाक्षुषज्ञानविषयस्य संबन्धी सारो बलं वाणः शब्दस्ताभ्यां सारवाणाभ्यां स्थिरशब्दाभ्यां सह वर्तते इति ससारवाणः । बवयोरभेद इत्युक्तम् । न युज्यते कुत्रापीत्ययुक्सङ्गरहितः । क्विप् । बाणः शरः । जातावेकवचनम् । घनं सान्द्रमर्जुनस्य बाणपूगं शरव्रातं विदार्य विभिद्य घनं निबिडं विदार्यो भूमिकूष्माण्ड्यो लताविशेषा अर्जुनाः ककुभवृक्षा बाणा नीलसैरेयकाः पूगाः क्र-

मुक्तास्तेषाम्। 'विभाषा वृक्ष–'इत्यादिना द्वन्द्वैकवद्भावः। विदार्यार्जुनबाणपूगं ससार। विवेशेत्यर्थः। 'सृ गतौ'। यद्वा तदानीमेव युगलोचनस्यार्जुनस्य बाणः ससारेत्यर्थः॥

रुजन्महेषून्[1]बहुधाशुपातिनो मुहुः शरौघैरपवारयन्दिशः।
चलाचलोऽनेक इव क्रियावशान्महर्षिसंघैर्बुबुधे धनंजयः॥५१॥

रुजन्नित्यादि॥ बहुधाशुपातिनः शीघ्रमापततो महेषून्मुहुः शरौघै रुजन्भञ्जयन्। तथा दिशश्चापवारयन्नाच्छादयन्क्रियावशात्तत्तद्गतिवशाच्चलाचलोऽतिचञ्चलो धनंजयोऽर्जुनो महर्षिसंघैरनेको बहुविध इव बुबुधे ददृशे॥

विकाशमीयुर्जगतीशमार्गणा विकाशमीयुर्जगतीशमार्गणाः।
विकाशमीयुर्जगतीशमार्गणा विकाशमीयुर्जगतीशमार्गणाः ५२

विकाशमिति॥ जगतीशस्य पृथिवीपतेरर्जुनस्य मार्गणा बाणा विकासं विस्तारमीयुः। तथा जगति लोक ईशमार्गणाः शंभुशरा विकासं विषमगतिमीयुः। भङ्गमीयुरित्यर्थः। तथा जगतीं पृथ्वीं श्यन्ति तनूकुर्वन्तीति जगतीशा दानवाः। 'आतोऽनुपसर्गे कः'। तान्मारयन्तीति जगतीशमारः। म्रियतेर्ण्यन्तात्क्विप्। ते च ते गणाः प्रमथाश्च जगतीशमार्गणा विकासमुल्लासमीयुः। हर्षं प्रापुरित्यर्थः। अहो देवेऽप्यस्य पराक्रमप्रसर इति विस्मयादिति भावः। तदानीं मार्गयन्तीति मार्गणा अन्वेषकाः। कर्तरि ल्युट्। जगतीशस्य त्रैलोक्यनाथस्य मार्गणा अन्वेषकाः शिवद्रष्टारो देवर्ष्यादयो वीनां पक्षिणां कासो गतिरत्रेति विकासमाकाशमीयुः। दिदृक्षयेति भावः॥

संपश्यतामिति शिवेन वितायमानं
लक्ष्मीवतः क्षितिपतेस्तनयस्य वीर्यम्।
अङ्गान्यभिन्नमपि तत्त्वविदां मुनीनां
रोमाञ्चमञ्चिततरं बिभरांबभूवुः॥ ५३॥

इति भारविकृतौ महाकाव्ये किरातार्जुनीये पञ्चदशः सर्गः।

संपश्यतामिति॥ इतीत्थं शिवेन वितायमानं विस्तार्यमाणम्। 'तनोतेर्यकि' इति वैकल्पिकं आकारादेशः। लक्ष्मीवतो जयश्रीमतः। 'मादुपधायाः–'इत्यादिना मतुपो मस्य वकारः। क्षितिपतेस्तनयस्यार्जुनस्य वीर्यं शौर्यं संपश्यतां तत्त्वविदामपि हरेरंशावतारोऽयमिति विदुषामपि। किमुतान्येषामिति भावः। मुनीनामङ्गानि गात्राण्यभिन्नमविरलमञ्चिततरमतिरुचिरं रोमाञ्चं रोमहर्षं विभरांबभूवुर्बभ्रुः। 'भीह्री–' इत्यादिना विकल्पादाम्प्रत्ययः॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां किरातार्जुनीयकाव्यव्याख्यायां घण्टापथसमाख्यायां पञ्चदशः सर्गः समाप्तः॥

---

१. 'हरेषून्' इति पाठः.

# षोडशः सर्गः ।

ततः किराताधिपतेरलघ्वीमाजिक्रियां वीक्ष्य विवृद्धमन्युः ।
स तर्कयामास विविक्ततर्कश्चिरं विचिन्वन्निति कारणानि ॥ १ ॥

तत इति ॥ ततोऽनन्तरं किराताधिपतेः संबन्धिनीमलघ्वीं गुर्वीमाजिक्रियां रणकर्म वीक्ष्य विवृद्धमन्युर्विवृद्धकोपो विविक्तो निष्कलङ्कस्तर्क ऊहो ज्ञानं वा यस्य सोऽर्जुनः कारणानि रणभराशक्तिकारणानि विचिन्वन्विमृशन्नितीत्थं वक्ष्यमाणप्रकारेण तर्कयामासाभ्यूहितवान् ॥

अथ त्रयोविंशतिश्लोकैर्वितर्कमेवाह—

मदस्रुतिश्यामितगण्डलेखाः क्रामन्ति विक्रान्तनराधिरूढाः ।
सहिष्णवो नेह युधामभिज्ञा नागा नगोच्छ्रायमिवाक्षिपन्तः ॥२॥

मदेत्यादि ॥ इहास्मिन्युद्धे मदस्रुतिभिर्मदप्रवाहैः श्यामाः कृताः श्यामिता गण्डलेखाः कपोलभागा येषां ते विक्रान्ताः पराक्रमं कुर्वन्तः । कर्तरि क्तः । 'शूरो वीरश्च विक्रान्तः' इत्यमरः । तैर्नरैरधिरूढाः सहिष्णवो रणभरक्षमा युधां युद्धानामभिज्ञाः । शिक्षिता इत्यर्थः । कृद्योगात्कर्मणि षष्ठी । किं च । नगानामुच्छ्रायं पर्वतानामौन्नत्यम् । घञन्तेनोपसर्गस्य समासो नोपसृष्टाद्धञ्प्रत्ययः । 'श्रिणीभुवोऽनुपसर्गे' इत्यत्रानुपसर्ग इति निषेधात् । आक्षिपन्तः प्रतिषेधयन्त इव स्थिताः । तथोन्नता इत्यर्थः । नागा गजा इह सङ्ग्रामे न क्रामन्ति न चरन्ति । यथा युद्धान्तरेष्विति शेषः । एवमुत्तरत्रापि सर्वत्र द्रष्टव्यम् । तथापि कथं मे शक्तिह्रासोऽयमिति सर्वत्र तात्पर्यार्थः ॥

विचित्रया चित्रयतेव भिन्नां रुचं रवेः केतनरत्नभासा ।
महारथौघेन न संनिरुद्धा पयोदमन्द्रध्वनिना धरित्री ॥ ३ ॥

विचित्रेति ॥ विचित्रया नानावर्णया केतनानां रत्नानि तेषां भासा प्रभया भिन्नां संवलितां रवे रुचं कान्तिं चित्रयता विचित्रवर्णां कुर्वतेव स्थितेनेति केतनौन्नत्यनिमित्तेयमुत्प्रेक्षा । पयोदमन्द्रध्वनिना मेघगम्भीरघोषेण महतां रथानामोघेन समूहेन धरित्री न संनिरुद्धा नावृता ॥

समुल्लसत्प्रासमहोर्मिमालं परिस्फुरच्चामरफेनपङ्क्ति ।
विभिन्नमर्यादमिहातनोति नाश्वीयमाशा जलधेरिवाम्भः ॥ ४ ॥

समुल्लसदिति ॥ इह युद्धे प्रासाः कुन्ताः । 'प्रासस्तु कुन्तः' इत्यमरः । ते महोर्मय इव तेषां मालाः समुल्लसन्त्यो यत्र तत्समुल्लसत्प्रासमहोर्मिमालम् । चामराणि

१. 'विवृत्त' इति पाठः. २. 'अभिस्फुरत्'; 'अतिस्फुरत्' इति पाठौ.

फेना इव चामरफेनास्तेषां पङ्क्तयः परिस्फुरन्त्यश्चामरफेनपङ्क्तयो यत्र तत्तथोक्तम्। अश्वीयमश्वसमूहः। 'वृन्दे त्वश्वीयमाश्ववत्' इत्यमरः। जलधेरम्भ इव विभिन्नमर्यादमुच्छृङ्खलं यथा तथाशा दिशो नातनोति नावृणोति ॥

**हताहतेत्युद्धतभीमघोषैः समुज्झिता योद्धृभिरभ्यमित्रम्।**
**न हेतयः प्राप्ततडित्त्विषः खे विवस्वदंशुज्वलिताः पतन्ति ॥ ५ ॥**

हतेति ॥ हत प्रहरताहत विध्यत। हन्तेर्लोट्। मध्यमपुरुषबहुवचनम्। 'अनुदात्तोपदेश—' इत्यादिनानुनासिकलोपः। आहतेत्यत्र कर्मणः प्रयोगासंभवेऽपि हन्तेः स्वाभाविकसकर्मत्वस्यानपायात्। अकर्मकत्वस्य चात्र विवक्षितत्वेन कर्मनिवृत्त्यैव तन्निवृत्तेः 'आङो यमहनः' इत्यात्मनेपदम्। इत्येवमुद्धताः प्रगल्भा भीमाश्च घोषा येषां तैर्योद्धृभिर्योधैरभ्यमित्रममित्रानभि समुज्झिता मुक्ता विवस्वतोंऽशुभिः। प्रतिफलितैरिति भावः। ज्वलिता दीपिता अतएव प्राप्तास्तडितां त्विष इव त्विषो याभिस्ता हेतयः शस्त्राणि खे न पतन्ति। समुल्लसन्तो न दृश्यन्त इत्यर्थः। 'हेतिः स्यादायुधे' इति विश्वः॥

**अभ्यायतः[1] संततधूमधूम्रं व्यापि प्रभाजालमिवान्तकस्य।**
**रजः प्रतूर्णाश्वरथाङ्गनुन्नं[2] तनोति न व्योमनि मातरिश्वा ॥ ६ ॥**

अभीति ॥ अभ्यायतो वीरान्हन्तुमभ्यागच्छतः। इणः शतृप्रत्ययः। अन्तकस्य कालस्य संबन्धि संततं सततं धूमवद्धूम्रं व्यापि व्यापकं प्रभाजालमिव स्थितं प्रतूर्णैर्वेगवद्भिरश्वै रथाङ्गै रथचक्रैश्च नुन्नं प्रेरितं रजो मातरिश्वा मरुद्व्योमन्यन्तरिक्षे न तनोति न विस्तारयति ॥

**भूरेणुना रासभधूसरेण तिरोहिते वर्त्मनि लोचनानाम्।**
**नास्त्यत्र तेजस्विभिरुत्सुकानामह्नि प्रदोषः सुरसुन्दरीणाम् ॥ ७ ॥**

भूरेणुनेति। अत्राहवे रासभो गर्दभस्तद्वद्धूसरेणेषत्पाण्डुना। 'रासभो गर्दभः खरः' इत्यमरः। 'ईषत्पाण्डुस्तु धूसरः' इति च। भूरेणुना रजसा लोचनानां वर्त्मनि चक्षुर्मार्गे तिरोहिते सति तेजस्विभिस्तेजस्विषु वीरेषूत्सुकानाम्। वीरवरणार्थमागतानामित्यर्थः। 'प्रसितोत्सुकाभ्यां तृतीया च' इति विकल्पात्तृतीया। सुरसुन्दरीणामह्नि दिवस एव प्रदोषो रात्रिमुखं नास्ति। अन्धकारवत्त्वाद्दृष्टेस्तिरोधानाद्रात्रिभ्रमः स्यादिति भावः ॥

**रथाङ्गसंक्रीडितमश्वहेषा बृहन्ति मत्तद्विपबृंहितानि।**
**संघर्षयोगादिव मूर्छितानि ह्रादं[3] निगृह्णन्ति न दुन्दुभीनाम् ॥ ८ ॥**

रथाङ्गेति ॥ रथाङ्गसंक्रीडितं रथचक्रकूजितमश्वानां च हेषा ह्रेषितानि शब्दितानि। 'अश्वानां हेषा ह्रेषा च निःस्वनः' इत्यमरः। बृहन्ति महान्ति मत्तद्विपानां बृंहि-

१. 'संप्रति' इति पाठः. २. 'धूतं' इति पाठः. ३. 'नादं' इति पाठः.

तानि । 'बृंहितं करिगर्जितम्' इत्यमरः । संघर्षयोगादिव परस्परस्पर्धासंबन्धादिव मूर्च्छितानि वृद्धिं गतानि सन्ति । 'नपुंसकमनपुंसक–'इत्यादिना नपुंसकैकशेषः । दुन्दुभीनां भेरीणां ह्रादं निर्घोषम् । 'स्वाननिर्घोषनिर्ह्राद–' इत्यमरः । न निगृह्णन्ति न तिरस्कुर्वन्ति ॥

**अस्मिन्यशःपौरुषलोलुपानामरातिभिः प्रत्युरसं क्षतानाम् ।**
**मूर्च्छान्तरायं मुहुरुच्छिनत्ति नासारशीतं करिशीकराम्भः ॥ ९ ॥**

अस्मिन्निति ॥ अस्मिन्रणे यशःपौरुषयोर्लोलुपानां गृध्नूनामतएवारातिभिः प्रत्युरसमुरसि । 'प्रतेरुरसः सप्तमीस्थात्' इति समासान्तः । क्षतानां विद्धानां संबन्धिनं मूर्च्छैवान्तरायो रणविघ्नस्तमासारशीतं वर्षधाराशीतलम् । 'धारासंपात आसारः' इत्यमरः । करिणां शीकर एवाम्भः कर्तृ मुहुर्नोच्छिनत्ति न नाशयति ॥

**असृङ्नदीनामुपचीयमानैर्विदारयद्भिः[1] पदवीं ध्वजिन्याः ।**
**उच्छ्रायमायान्ति न शोणितौघैः पङ्कैरिवाश्यानघनैस्तटानि ॥ १० ॥**

असृगिति ॥ असृङ्नदीनां तटान्युपचीयमानैरुपचयं नीयमानैस्तथा ध्वजिन्याः पदवीं विदारयद्भिर्दुःसंचारां कुर्वद्भिः । 'विदूरयद्भिः' इति पाठे विदूरां दूरसंचारां कुर्वद्भिः । आश्याना ईषच्छुष्काः । 'संयोगादेरातो धातोर्यण्वतः' इति श्यायतेर्निष्ठानत्वम् । घनाः सान्द्रास्तैराश्यानघनैः शोणितौघैः पङ्कैरिवोच्छ्रायं वृद्धिं नायान्ति न प्राप्नुवन्ति ॥

**परिक्षते वक्षसि दन्तिदन्तैः प्रियाङ्कशीता नभसः पतन्ती ।**
**नेह प्रमोहं प्रियसाहसानां मन्दारमाला विरलीकरोति ॥ ११ ॥**

परीति ॥ इह रणे दन्तिदन्तैर्गजदन्तैः परिक्षते ताडिते वक्षसि नभसः पतन्ती प्रियाया अङ्क इव शीता शीतला सुखकरी मन्दारमाला । सुरैर्मुक्तेति शेषः । प्रियं साहसं येषां तेषां प्रियसाहसानाम् । यतो गजाभियायिनामिति भावः । प्रमोहं प्रहारमूर्च्छां न विरलीकरोति न मन्दीकरोति । नापनयतीति यावत् ॥

**निषादिसंनाहमणिप्रभौघे परीयमाणे करिशीकरेण ।**
**अर्कत्विषोन्मीलितमभ्युदेति न खण्डमाखण्डलकार्मुकस्य ॥ १२ ॥**

निषादीति ॥ करिणां शीकरेण पुष्करतुषारेण परीयमाणे व्याप्यमाने निषादिनो हस्त्यारोहाः । 'हस्त्यारोहा निषादिनः' इत्यमरः । तेषां संनाहाः कवचानि तेषां मणिप्रभौघे रत्नांशुजालेऽर्कस्य त्विषा तेजसोन्मीलितमुत्पादितमाखण्डलकार्मुकस्येन्द्रधनुषः । 'आखण्डलः सहस्राक्षः' इत्यमरः । खण्डं नाभ्युदेति ॥

**महीभृता पक्षवतेव भिन्ना विगाह्य मध्यं परवारणेन ।**
**नावर्तमाना[2] निनदन्ति भीममपां निधेराप इव ध्वजिन्यः ॥ १३ ॥**

---

१. 'निवारयद्भिः;' 'विष्टम्भयद्भिः' इति पाठौ. २. 'निवर्त्यमाना निनदन्ति;' 'आवर्तमाना न नदन्ति' इति पाठौ.

महीति ॥ पक्षवता सपक्षेण महीभृता मैनाकेनेव परवारणेन शत्रुगजेन मध्यं विगाह्य प्रविश्य भिन्नाः क्षोभिता ध्वजिन्यः सेनाः । 'ध्वजिनी वाहिनी सेना' इत्यमरः। अपां निधेः सागरस्याप इव । आवर्तमाना भ्रमन्त्यः सत्यः । 'स्यादावर्तोऽम्भसां भ्रमः' इत्यमरः । भीमं न निनदन्ति ॥

**महारथानां प्रतिदन्त्यनीकमधिस्यदस्यन्दनमुत्थितानाम् ।**
**आमूललूनैरतिमन्युनेव मातङ्गहस्तैर्व्रियते न पन्थाः ॥ १४ ॥**

महारथानामिति ॥ प्रतिदन्त्यनीकं दन्तिसैन्यं प्रति । 'अनीकं तु रणे सैन्ये' इति विश्वः । अधिस्यदा महारयाः स्यन्दना रथा यत्र तत्तथा । 'रंहस्तरसी तु रयः स्यदः' इत्यमरः । उत्थितानां प्रस्थितानां महारथानां रथिकविशेषाणाम् । 'आत्मानं सारथिं चाश्वान्रक्षन्युध्येत यो नरः । स महारथसंज्ञः स्यादित्याहुर्नीतिकोविदाः' इति लक्षणात् । पन्था मार्ग आमूलं लूनैश्छिन्नैर्मातङ्गहस्तैर्नागकरैरतिमन्युनातिक्रोधेनेव न व्रियते न निरुध्यते ॥

**धृतोत्पलापीड इव प्रियायाः शिरोरुहाणां शिथिलः कलापः ।**
**न बर्हभारः पतितस्य शङ्कोर्निषादिवक्षःस्थलमातनोति ॥ १५ ॥**

धृतेति । पतितस्य वक्षसि मग्नस्य शङ्कोस्तोमरस्य संबन्धी । 'वा पुंसि शल्यं शङ्कुर्ना सर्वला तोमरोऽस्त्रियाम्' इत्यमरः । बर्हभारस्तन्मूलबद्धो लाञ्छनपिच्छकलापो धृत उत्पलापीडः कुवलयशेखरो यस्मिन्स प्रियायाः संबन्धी शिथिलः स्रस्तः शिरोरुहाणां कलापः केशपाश इव निषादिनो हस्त्यारोहस्य वक्षःस्थलं नातनोति न व्याप्नोति ॥

**उज्झत्सु संहार इवास्तसंख्यमह्नाय तेजस्विषु जीवितानि ।**
**लोकत्रयास्वादनलोलजिह्वं न व्याददात्याननमत्र मृत्युः ॥ १६ ॥**

उज्झत्स्विति ॥ अत्राहवे संहारे कल्पान्त इव तेजस्विषु वीरेष्वस्तसंख्यमसंख्यं यथा तथाह्नाय झटिति । 'द्राग्झटित्यञ्जसाह्नाय' इत्यमरः । जीवितान्युज्झत्सु त्यजत्सु सत्सु मृत्युर्लोकत्रयस्यास्वादने भक्षणे लोला गृध्नुर्जिह्वा यस्मिंस्तदाननं न व्याददाति न विवृणोति । 'आङो दोऽनास्यविहरणे' इत्यत्रानास्यविहरण इति निषेधादात्मनेपदम् ॥

सत्यमेवम् । तथापि किमेतत्कुत्सितम् । तत्राह—

**इयं च दुर्वारमहारथानामाक्षिप्य वीर्यं महतां बलानाम् ।**
**शक्तिर्ममावस्यति हीनयुद्धे सौरीव ताराधिपधाम्नि दीप्तिः ॥ १७ ॥**

इयमिति ॥ इयं मम शक्तिश्च दुर्वाराः पराक्रमिणो महारथा येषु तेषां महतां बलानां वीर्यमाक्षिप्य निरस्य ताराधिपधाम्नि चन्द्रतेजसि । सूर्यस्येयं सौरी । 'सूर्यति-

१. 'इह' इति पाठः. २. 'कीर्तिम्' इति पाठः. ३. 'दीपः' इति पाठः.

ध्यागस्त्यमत्स्यानां य उपधायाः' इति स्त्रियां ङीप् । यकारस्य लोपः । दीप्तिरिव हीनयुद्धे किरातरणेऽवस्यत्यवसीदति । एतच्च विरुद्धमत्यद्भुतं चेति भावः । 'षोऽन्तकर्मणि' इति धातोर्लेट् ॥

**माया स्विदेषा मतिविभ्रमो वा ध्वस्तं नु मे वीर्यमुताहमन्यः ।**
**गाण्डीवमुक्ता हि [1]यथा पुरा मे पराक्रमन्ते न शराः किराते ॥ १८**

मायेति ॥ एषा शक्तिह्रासरूपा माया स्विद्देवताक्षोभणं नाम । मतिविभ्रमो बुद्धिविपर्ययो वा । अथवा मे वीर्यं ध्वस्तं नष्टं नु । उताहमन्योऽर्जुनो न वा । कुतः । हि यस्माद्गाण्डीवमुक्ता मे शराः पुरा यथापूर्वम् । परिपन्थिष्विवेत्यर्थः । किराते न पराक्रमन्तेऽप्रतिबन्धेन न प्रवर्तन्ते । 'उपपराभ्याम्' इति वृत्तावात्मनेपदम् । वृत्तिरप्रतिबन्धः ॥

**पुंसः पदं मध्यममुत्तमस्य द्विधेव कुर्वन्धनुषः प्रणादैः ।**
**नूनं तथा नैष यथास्य वेषः प्रच्छन्नमप्यूहयते हि चेष्टा ॥ १९ ॥**

पुंस इति ॥ किं च । उत्तमस्य पुंसः पुरुषोत्तमस्य मध्यमं पदमाकाशं धनुषः प्रणादैः । 'उपसर्गादसमासेऽपि णोपदेशस्य' इति णत्वम् । द्विधा कुर्वन्निव विदारयन्निव स्थित एष किरातो नूनं तथा तथाभूतो न । कीदृशस्तत्राह—अस्य पुरुषस्य यथा यथाभूतो वेषः । वर्तत इति शेषः । वेषत एवायं किरातो न स्वरूपत इत्यर्थः । कुतः । हि यस्माच्चेष्टा व्यापारः प्रच्छन्नमपि निगूढमपि स्वरूपमूहयते तर्कयते । तस्याः स्वभावादव्यभिचारादिति भावः ॥

अथ चतुर्भिश्चेष्टामेवाचष्टे—

**धनुः प्रबन्धध्वनितं [2]रुषेव सकृद्विकृष्टा विततेव मौर्वी ।**
**संधानमुत्कर्षमिव व्युदस्य मुष्टेरसंभेद इवापवर्गे ॥ २० ॥**

धनुरिति ॥ धनू रुषेव प्रबन्धेनाविच्छेदेन ध्वनितम् । ध्वनतेः कर्तरि क्तः । मौर्वी च सकृद्विकृष्टा विततेवैकवाराकर्षणादेव विततेव स्थिता । संधानं बाणसंधानमुत्कर्षं तूणादुद्धरणं व्युदस्येव वर्जयित्वा । किमु कृतमिति शेषः । अपवर्गे बाणमोक्षेऽपि मुष्टेरसंभेदोऽसंघटनमिव । मुष्टिबन्धं विनैव बाणमोक्षः कृत इवेति हस्तलाघवोक्तिः ॥

**अंसा[3]ववष्टब्धनतौ समाधिः शिरोधराया रहितप्रयासः ।**
**धृता [4]विकारांस्त्यजता मुखेन प्रसादलक्ष्मीः शशलाञ्छनस्य ॥ २१ ॥**

अंसाविति ॥ किं च । अंसाववष्टब्धौ स्थिरावस्थापितौ च तौ नतौ चावष्टब्धनतौ

१. 'तथा पुरेव'; 'तया पुरैव' इति पाठौ. २. 'रुषेव' इति पाठः. ३. 'अवष्टम्भ' इति पाठः. ४. 'विकारं' इति पाठः.

शिरोधरायाः कंधरायाः समाधिः संस्थानविशेषै रहितः प्रयासो यस्य स तथोक्तः। निःप्रयास इत्यर्थः। तथा विकारांस्त्यजता। जितश्रमत्वान्निर्विकारेणेत्यर्थः। मुखेन शशलाञ्छनस्येन्दोः प्रसादलक्ष्मीर्धृता। असंभवत्संबन्धो निदर्शनालंकारः॥

**प्रहीयते कार्यवशागतेषु स्थानेषु विष्टब्धतया न देहः।**
**स्थितप्रयातेषु ससौष्ठवश्च लक्ष्येषु पातः सदृशः शराणाम्॥ २२॥**

प्रहीयत इति॥ कार्यवशेन प्रयोजनवशेनागतेषु स्थानेष्वालीढादिस्थानकेषु देहो विष्टब्धतया स्थिरतया कर्त्र्या न प्रहीयते न त्यज्यते। किंतु स्थिर एव तिष्ठतीत्यर्थः। सुष्ठु भावः सौष्ठवं लाघवम्। उद्गात्रादित्वादञ्प्रत्ययः। तेन सह वर्तमानः ससौष्ठवः शराणां पातश्च स्थितान्यचलानि प्रयातानि चलानि तेषु स्थितप्रयातेषु चलाचलेषु लक्ष्येषु विषये सदृश एकरूपः॥

**परस्य भूयान्विवरेऽभियोगः प्रसह्य संरक्षणमात्मरन्ध्रे।**
**भीष्मेऽप्यसंभाव्यमिदं गुरौ वा न संभवत्येव वनेचरेषु॥ २३॥**

परस्येति॥ किं च। परस्य विवरे रन्ध्रे। अल्पेऽपीति शेषः। भूयान्भूयिष्ठोऽभियोगो ज्ञातृत्वम्। परस्य रन्ध्रज्ञातृत्वात्प्रहार उद्योग इत्यर्थः। आत्मनो रन्ध्रे विवरे। अनल्पेऽपीति शेषः। प्रसह्य झटिति संरक्षणं गोपनं च। भूयिष्ठमिति शेषः। इदं द्वयं भीष्मेऽपि गुरौ वा द्रोणे वाप्यसंभाव्यं दुर्वितर्क्यम्। वनेचरेषु न संभवत्येव। अतो नायं किरातः। किं त्वेष तिरोहितवेषः कोऽप्यमानुषः पुरुष इति भावः॥

**अप्राकृतस्याहवदुर्मदस्य निवार्यमस्यास्त्रबलेन वीर्यम्।**
**अल्पीयसोऽप्यामयतुल्यवृत्तेर्महापकाराय रिपोर्विवृद्धिः॥ २४॥**

अप्राकृतस्येति॥ अप्राकृतस्योक्तरीत्यासाधारणस्याहवदुर्मदस्य रणमत्तस्यास्य किरातस्य वीर्यं तेजोऽस्त्रबलेन दिव्यास्त्रमहिम्ना निवार्यं निवारणीयम्। अन्यथानिवार्यत्वमस्येति भावः। तथा हि। अल्पीयसोऽप्यत्यल्पस्याप्यामयतुल्यवृत्ते रोगसमानक्रियस्य। 'रोगव्याधिगदामयाः' इत्यमरः। रिपोर्विवृद्धिर्महापकाराय। किं त्वयं महानुभाव इति भावः॥

**स संप्रधार्यैवमहार्यसारः सारं विनेष्यन्सगणस्य शत्रोः।**
**प्रस्वापनास्त्रं द्रुतमाजहार ध्वान्तं घनानद्ध इवार्धरात्रः॥ २५॥**

स इति॥ अहार्यसारोऽनिवार्यवीर्यः सोऽर्जुन एवं संप्रधार्य निश्चित्य सगणस्य सानुगस्य शत्रोः सारं सत्त्वं विनेष्यन्नपनेष्यन्। प्रस्वाप्यन्ते शाय्यन्तेऽनेनेति प्रस्वापनं तदेवास्त्रम्। घनानद्धो मेघव्याप्तोऽर्धरात्रो निशीथः। 'अर्धरात्रनिशीथौ द्वौ' इत्यमरः।

---

१. 'स्थिर' इति पाठः. २. 'इदम्'; 'इत्थम्' इति पाठौ. ३. 'घनारब्ध' इति पाठः.

'अर्धं नपुंसकम्' इति समासः। 'अह्नःसर्वैकदेश—' इत्यादिना समासान्तः 'रात्राह्नाहाः पुंसि' इति पुंलिङ्गता। ध्वान्तमिव द्रुतमाजहाराचकर्ष ॥

**प्रसक्तदावानलधूमधूम्रा निरुन्धती धाम सहस्ररश्मेः ।**
**महावनानीव महातमिस्रा छाया ततानेशबलानि काली ॥ २६ ॥**

प्रसक्तेति ॥ प्रसक्तः संततो यो दावानलधूमस्तद्वद्धूम्रा धूसरा सहस्ररश्मेर्धाम तेजो निरुन्धत्यावृण्वती काली कृष्णवर्णा। 'जानपद—' इत्यादिना ङीष्। छाया कान्तिः। ईशबलानि महातमिस्रा महती तमःसंततिः। 'तमिस्रा तु तमस्ततिः' इति विश्वः। महावनानीव। ततान व्यानशे ॥

**आसादिता तत्प्रथमं प्रसह्य प्रगल्भतायाः पदवीं हरन्ती ।**
**सभेव भीमा विदधे गणानां निद्रा निरासं प्रतिभागुणस्य ॥२७॥**

आसादितेति ॥ तदेवासादनं प्रथमं तत्प्रथमं यथा तथा प्रसह्यासादिता प्राप्ता प्रगल्भताया व्यवहारधाष्ट्र्यस्य पदवीं हरन्ती भीमा भयंकरी निद्रा। उक्तविशेषणा सभा संसदिव। गणानां प्रतिभा प्रज्ञा शक्तिः सैव गुणस्तस्य निरासं प्रतिभाक्षयं विदधे चक्रे॥

**गुरुस्थिराण्युत्तमवंशजत्वाद्विज्ञातसाराण्यनुशीलनेन ।**
**केचित्समाश्रित्य गुणान्वितानि सुहृत्कुलानीव धनूंषि तस्थुः॥२८॥**

गुर्वीति ॥ केचिदुत्तमवंशजत्वाद्वंशो वेणुः कुलं च। 'वंशो वेणौ कुले च' इति विश्वः। गुरूणि महान्ति स्थिराणि दृढानि च गुरुस्थिराण्यनुशीलनेन परिचयबलेन विज्ञातः सारो बलं येषां तानि गुणैर्मौर्वीभिः शौर्यादिभिश्चान्वितानि धनूंषि सुहृत्कुलानि मित्रकुलानीव समाश्रित्य तस्थुः। धनूंष्यवष्टभ्य निदध्युरित्यर्थः॥

**कृतान्तदुर्वृत्त इवापरेषां पुरः प्रतिद्वन्द्विनि पाण्डवास्त्रे ।**
**अतर्कितं पाणितलान्निपेतुः क्रियाफलानीव तदायुधानि ॥ २९ ॥**

कृतान्तेति ॥ कृतान्तदुर्वृत्ते दैवदुश्चेष्टित इव। 'कृतान्तो यमसिद्धान्तदैवाकुशलकर्मसु' इति विश्वः। पाण्डवास्त्रे पुरः प्रतिद्वन्द्विनि प्रतिकूलवर्तिनि सति तदा तस्मिन्कालेऽपरेषामायुधानि क्रियाफलानि कृष्यादिफलानीव। अतर्कितमविचारितमेव पाणितलान्निपेतुः॥

**अंसस्थलैः केचिदभिन्नधैर्याः स्कन्धेषु संश्लेषवतां तरूणाम् ।**
**मदेन मीलन्नयनाः सलीलं नागा इव स्रस्तकरा निषेदुः ॥ ३० ॥**

---

१. 'संरुन्धती' इति पाठः. २. 'निशातमिस्रा' इति पाठः. ३. 'गुणानतानि' इति पाठः. ४. 'वीर्या' इति पाठः.

